J-2/2



# जयाशा शारदा पञ्चस्तवी



प्रणेता :—

श्री जगन्नाथ रिवू शास्त्री
डी. ए. वी. हाई स्कूल
रैणावारी ( श्रीनगर )

प्रकाशक :—

अवतार कृष्ण रिवू
भट्टयार, आलीकदल,
श्रीनगर (काश्मीर)

मुद्रक:-

कृष्णा प्रिंटिंग प्रेस
श्रीनगर (काश्मीर)

ॐ

श्री शारदा जयाशा

पञ्चस्तवी ।

( स्वर्गीया श्रीजयाकिशोरी हण्डू स्मारिका )

—()❀()—

ॐ नमः श्री शारदा भगवत्यै
अथ श्यामा स्तोत्रं प्रथमम् ।

श्री शारदाब्जनयना शरदिन्दुशुभ्रा
भासा स्वया हरतु नो हृदयान्धकारम् ।
या मौलिभिः सुरवरै र्विहित प्रणामा,
ज्ञानार्थिभि र्मुनिवरैः सततं विचार्या ॥ १ ॥
क्षीरोदधेर्मथननिर्गतकालकूटाद्,
भीतैः सुरासुरगणैरऽभिवन्द्यमाना,
आज्ञां चकार गमनाय शिवस्य पार्श्वे,
सा शारदेन्दुवदना विशदाधरोष्ठी ॥ २ ॥
या कालकूट भयभीत सुरासुरादीन्,
प्राणान्निनाय शशिमौलिवरान्तिके तान्,
दत्तं च तैः सुरवरैः शशिशेखराय,
तद्देवदानवभयप्रदकालकूटम् ॥ ३ ॥

तद्वै विषं पशुपतिः स्वकरे गृहीत्वा,
ध्यात्वा च तां भयहरीं स्वकलां शरण्याम्,
पीत्वा चकार पशुपाशहरोऽभयान्तान्,
शक्त्या मुमोच विषकालभयं तदानीम् ॥ ४ ॥
शक्तिश्च स्वहृदयसंस्थितभर्तृभक्त्या,
सद्योजहार विषवीर्यमत्युल्बणं तत्,
कण्ठस्थलात्परमभक्तिवशात्स्वपत्युः,
तां नौमिपापशमनीं वरदां च श्यामाम् ॥५॥
तां श्यामिकांपरिदधौ शशिगौरकाये,
या निर्गता शिवगलाद्विषलाञ्छनाढ्यात्,
सा श्यामिका भवतु मञ्जुलमङ्गला नः,
सांकर्षिणी भगवती भवतापभेत्री ॥ ६ ॥
गंगेव माता त्रिपदा त्रितापहा,
साश्यामिका कर्ममलापहारिणी,
या निर्गता शैलसुतेव चिद्गिरेः,
भूयात्सदा भारतभाग्यवर्धिनी ॥ ७ ॥

इति श्यामास्तोत्रं प्रथमम्

.... .... ....

ॐ

अथ भावोपहारस्तोत्रं द्वितीयम् ।

*)—*—(*

श्वेताङ्गैः शुभलक्षणैः शशिनिभा शान्तिप्रदा शारदा,
वीणापुस्तकधारिणी करयुगे वामे करे पङ्कजम्;
वीणावादन तत्परा शशिकलां भाले दधाना सदा
भक्तानां भवतापहा शिवमयी शं नःविदध्यात्परम् ॥१॥
वस्तुपूर्णानि पात्राणि–भोजनार्थं तवेश्वरि !
आहरामि तव भक्त्या–कृपया तानि स्वीकुरु ॥ २ ।
मदीयान् शृणु त्वं देवि–नादान्वै बहुशः शिवे ।
त्वत्पदप्रक्षालनायैवनेत्रवारिसृजाम्यहम् ॥ ३ ॥
तीव्रं व्रतं चरिष्यामि–भक्तिभावसमन्वितम् ।
कुङ्कुमागुरुकर्पूरैः–कायसौगन्ध्यकारकैः ॥ ४ ॥
वासयामि छादयामि शरीरं ते दुकूलकैः ।
स्वर्णमञ्चे कल्पयामि रत्नसिंहासनं तव ॥ ५ ॥
धूपदीपमयैः प्राणै नीराजनं करोमि ते ।
भक्तिभावयुतैः श्लोकैः करिष्यामि तव स्तुतिम् ॥ ६ ॥
भाजनानिविचित्राणि शुद्धानि कल्पितानि ते ।

क्षीराज्यखण्ड पूर्णानि पात्राणि सज्जितानि च ॥ ७ ॥
विचित्र कुसमाद्यैश्च पूजयामि महेश्वरि !
स्नेहासवैश्च पात्राणि त्वदर्थं पूरयाम्यहम् ॥ ८ ॥
बाल्यं यौवनमुल्लङ्घ्य वार्धके शिथिलोऽस्म्यऽहम् ।
दूरत्वं दुःसहं तेऽद्य क्षन्तव्योऽस्मि त्वयानघे ॥ ९ ॥
परिवारोमदीयो वै तुभ्यमेवार्पितो मया ।
शरीरमर्पयित्वा त्वां ध्यायामि सुरपूजिते ॥ १० ॥
आगतोऽहं प्रेमपूर्णः पुण्य संभारवाहकः ।
स्रजंग्रथ्नामि सौम्यांहि पूजयामि तया सदा ॥ ११ ॥
मामूढमऽज्ञजानीहि भक्तिभावसमन्वितम् ।
अतोऽहमागतो देवि शरणं पापनाशिनीम् ॥ १२ ॥
जानामि कर्म नच सेवनं ते जानामि धर्मं नच पूजनं ते
जानामि विद्यां नच संस्मृतिस्ते भक्तिं प्रयच्छेश्वरि सर्वदा मे
द्वादशान्तमयीपूजा कल्पिता भक्ति भावतः ।
यःपठेत्प्रयतो नित्यं द्वादशान्तं सगच्छति ॥ १४ ॥

इति भावोपहार स्तोत्रं द्वितीयम् ॥

*)—*—(*

ॐ

अथ त्रिपदास्तोत्रं तृतीयम् ॥

—() ❀ ()—

चतुर्भुजां पङ्कजमद्मलालितां
चतुर्भुजैर्धारितशोभनायुधाम् ।
चतुर्भुजेन स्वभुजैश्च पूजितां
जगद्धरां तां प्रणमामि शारदाम् ॥ १ ॥
चन्द्रानना चन्द्र किरीट दीप्तिः
त्रिनेत्ररम्या त्रिपदा त्रिधामा ।
पद्मासया शोभितपद्मपादा
सा पद्महस्ता भवतु प्रसन्ना ॥ २ ॥
या षट् सरोजे धृतपद्मपादा ।
विद्युल्लतेव प्रतिभाति चेतसि ।
या सज्जपन्ती प्रणवमनाहतं
ध्यायामि तां नित्यमहं स्वचेतसि ॥ ३ ॥
इति त्रिपदा स्तोत्रं तृतीयम् ॥

——+——

## अथ पञ्चोपचार स्तोत्रं चतुर्थम्



ॐ सा माता हरतु जगतां दुःखमोहान्धकारं
सद्यो या चोद्धरति सुगुणैर्मोहकूपान्धकारात् ।
नित्यं पायात्कमलवदना प्रांशुभिः स्वैः भुजैर्नः
योगक्षेमं दिशतु विविधं रक्षतात्स्वांश्च भक्तान् ॥१॥
सोऽहं प्रसादात्तव देवि ! मातः ! प्रासादरो वैभवताप भेत्रि
कदा भवेयं जनतापहारी सुनिर्मलश्चन्द्रइव प्रकाशी ॥ २ ॥
तव प्रसादाज्जनतापहारकं सुनिर्मलं पाद युगं विलालयन् ।
कदा भवेयं तवदासदास्यकृत्पुमां भवाब्धेःप्लवबच्चतारकः ॥३
हृदि क्रोधलोभेन्धनैः कामवह्निः
प्रदीप्तः प्रचण्डः ध्रुवं मोहसक्तः
कथं तत्र ध्याये पदब्जौ त्वदीयौ
प्रशान्ति नय त्वं दयास्नेह वृष्टया ॥ ४
न जानामि योगं जपं नैवपूजां ।
न जानामि मन्त्रं न जानामि यन्त्रम् ।
न जानामि यज्ञं न जानामि काव्यं
शिवे त्वां स्मरन्वै भवेयं पवित्रः ॥ ५ ॥

पञ्चोपचारैस्स कृतात्वदीया
पूजा मया कारुण पञ्चमञ्चे !
त्वं पञ्चवक्त्रै भँवकल्पवल्ली
चन्द्रानना सा भव नः प्रसन्ना ॥ ६ ॥
इति पञ्चोपचार स्तोत्रम् चतुर्थम्

... .... .... ...

अथ नवदुर्गा स्तोत्रम् पञ्चमम् ॥

—*******—

ॐ या चित्कला भगवती प्रथमम् सुसूक्ष्मा
विद्योतते सुकृतिनां हृदये पराख्या ।
भर्गाख्यया सवितृमण्डलमध्यसंस्था
सा बुद्धिचोदनपरा भवताद्वरेण्या ॥ १ ॥
ध्यायन्ति यां सहृदया हृदये प्रभाते
गायन्ति यां सुकवयो ललितै र्वचोभिः ।
यां योगिनः स्वहृदये परिशीलयन्ति ।
तां मोक्षदां भगवतीं शरणं प्रपद्ये ॥ २
शैलात्मजा कमलभूषितहंसयाना

दुर्गा च दुर्गतिहरा भवगौरसंगा ।
नारायणेन सुकृतैः स्मृतनामधेया
विघ्नान्निवारयतु द्वादशषड् भुजाढ्या ॥ ३ ॥
हे वासुदेवसहजे ! प्रणतार्तिहर्त्रि !
हे नन्दगोपजवदे ! वसुदेवनीते !
हे कंसराजदलिनि ! श्रितव्योममार्गे ।
देवैः स्तुते ! भगवति ! वरदे ! नमोऽस्तु ॥ ४ ॥

श्रीनीलकण्ठस्य हृतार्धका - या - पद्मे सहस्रे धृतपद्मपादा
योगेन्द्रवर्यैर्विहितप्रणामा - शैलात्मजा सा भवतु प्रसन्ना ।५
पूर्णेन्दुवक्त्रा शरदिन्दुगात्रा - भोगेन्द्रहारा नवद्विभुजाढ्या
सिंहाधिरूढा सुविशालनेत्रा - शैलात्मजा सा भवतु प्रसन्ना ।६
याषट सरोजे च कृताधिवासा तारंजपन्ती प्रणवं प्रमोदात्
सार्धं त्रिवृत्या च समुल्लसन्ती सा वेदमाता भवतु प्रसन्ना ॥ ७
या चन्द्रभाला कमलासनेस्वे - न्यस्तैकपादा धृतहस्तकोणा
कुक्षौ दधाना च सुशुभ्रवीणां - विद्यावतारा वरदा सदास्तात् ।८
सा स्कन्दमाता द्विरदाननार्चिता-शब्दात्मिका पद्यपदैरुदीरिता
उद्गीथबीजा प्रणवस्वरूपिणी - सापद्महस्ताऽभयदासदास्तात्
राधाकान्तसुदर्शनात्मजजगन्नाथेन संपादिता

नानाश्लोकमयीमनोहरपदैः श्रीशारदायाःस्तुतिः
सैषा सज्जनमान सेषुनितरां मोदप्रदा शर्मदा
भूयान्नो जयदायिनी भयहरी श्रीभारते कामदा । १०
सहस्रद्वयसंख्याके विक्रमे सप्तदशके
चैत्रेमासे दलेशुक्ले तृतीयस्यां खौदिने । ११
अभूदकाल कलिता जयाख्या तनया मम
तामुद्दिश्य कृता, ह्येषा सुमनोमालिका मया । १२
जयाशा भारतस्यास्तु सर्वत्र सर्वदापिच
भवे भवे जयाशानः प्रथतां च महीयताम् । १३
इति नवदुर्गा स्तोत्रं पञ्चमम्

विनीतः प्रार्थी, जगन्नाथ रिवू – शास्त्री



